**एस्.जगन्नाथः। मैसूरु**
jagannathas1956@gmail.com



# दशदिशम्

६
१७.३.२०२०

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

## जगन्नाथीयम्

**स्वान्तानन्दं सृजतु परमं स्कालराख्येषु वित्सु**
**स्याँन्स्क्रीट् स्याँन्स्क्रीडिति विलपितं भावुकेष्वश्रुकारि।**
**शुद्धैः शब्दैः कृतिषु गलितामोदबाष्पेषु कामं**
**संज्ञा या संस्कृतमिति वरा सैव चित्तोत्सवाय॥**

## आधुनिका योगा आध्यात्मिक्यश्च शक्तयः।

स्मरणशक्तिमतुलां बिभ्राणः स्वामी विवेकानन्दः 'पार्लिमेण्ट् आफ् वर्ल्ड् रिलीजन्स्(१८९३)' इत्यत्र गतवान् सन् स्वीयं परिचयपत्रं व्यस्मरत्-इत्येका घटना।

'योगजनितेन केवलमेकेनैव निःश्वासेन समग्रं यूरोप् भस्मीभवति' इत्युक्तवान् ; वेदस्य आन्तरङ्गिकं रहस्यं च विदितवान् -श्री अरविन्दः स्खलित्वा पादास्थि बभञ्ज-इत्यन्या घटना।

अन्यस्य च कस्यचिदाध्यात्मिकशक्तिसंपन्नस्य वृद्धस्य नेत्रदौर्बल्यमनुभूतम्-इत्यपरा घटना।

अत्र सर्वत्र कस्मायपि योगिने नाहं सोत्प्रासं विशेषणं दित्सामि। तत्र कारणमिदम्- तान् परितो ये तद्भक्तास्तच्छिष्याश्च ते परित्यक्तसर्वसंगाः स्वगुरुषु सश्रद्धाः। तेषां योगिनां वाक्यैः साधनैः तपसा च बहवः प्राप्ता आध्यात्मिकमानन्दम्। योगिनामेतेषां मनः नाल्पेषु विषयेषु लगति। दैहिकमारोग्यमपि तेषां कृतेऽत्यन्तमेव क्षुद्रो विषयः। अपि च शिष्याणां कर्मफलं ते स्वयमनुभवन्ति-यन्मत्यैव कृतमिति शिष्याणां विश्वासः। तस्मादेवैतेषां क्वाचित्कं लौकिकविषयेषु मग्नानामिव जनानां क्लेशा दैहिकदौर्बल्यादयश्च विषया न सोल्लुण्ठनं कटाक्षणीया- इत्येव मतिर्मे।

परन्तु, ये कथमप्यध्यात्मशक्तिसंपन्ना न भवन्ति, तेषां तु कदाचिदुच्चैःस्तरे वर्तमानानामिव साभिनयोक्तयो बाढं तिरस्कार्याः। खण्डनीयाश्च तेषामयुक्ता वाचोयुक्तयः।

कदाचिदहं कस्याश्चन अध्यात्मसंस्थायाः योगाभ्यास-निरतं तत्रैव निवासिनं कमपि -कांश्चनाध्यात्मिकान् विषयानधि-कृत्याचर्चम्। ''सत्यां चाध्यात्मिक्यां शक्तौ, दैहिकानि दौर्बल्यानि स्वयमेव दूरीभवन्ति'' इत्याह सः। ''मम नेत्रयोरहं स्पेक्टेकल्स् धरामि। अनया आध्यात्मिक्या शक्त्या नेत्रदौर्बल्यं किं दूरीभवती'' ति मया पृष्टोऽसौ ''बाढम्। तत्र कोऽपि न संशय''इत्युवाच।

''परन्तु परमाध्यात्मिकशक्सिंपन्नस्य भवद्गुरोः कथं स्पेक्टेकल्स् धारणम् ?''इति मया पृष्टो देहलीदीपन्यायेन कथञ्चित् स्खलद्गत्या वाचा ''आध्यात्मिकीं शक्तिं नेत्रारोग्यसदृशेषु क्षुद्रेषु विषयेषु नोपयुङ्क्ते सः'' इत्युदतरत्। ततश्चैतदप्ययोजयत्- ''मनुष्याणाम् आध्यात्मिकशक्ति प्राप्तिर्मुख्या, न पुनर्दैहिक मारोग्यम्।''अहं नामुञ्चं तम्। ''तर्ह्याध्यात्मिकशक्तिसम्पन्नस्य दैहिकानि दौर्बल्यानि दूरीभवन्तीति किमर्थमवोचः ?'' इत्य पृच्छम्। स झटिति ''मम बहूनि वर्तन्ते निर्वोढव्यानि कार्याणि। कृपयाऽधुना गम्यताम्'' इति वदन् मां ततोऽपासारयत्।

इत्थंलक्षणोऽन्यः प्रसंग एवमस्ति-

''यदि ध्यानं मयोक्तया रीत्या कुरुषे, तव ज्वरकासादयो रोगा द्रागेव नश्यन्ति, उल्लाघश्च भवसि'' इत्याह कश्चन मम पुरस्तात्। तथा वदन् स एव कासते स्म !

सत्यस्य कथनमपि योगस्यैव किलाङ्गम्। किमर्थमेते प्रारब्धयोगसाधनाः सन्तोऽपि, परिपक्वसाधना इवाभिनयन्तः शिष्यानपि प्राप्य तानुपदिदिक्षन्तीति मम पर्यनुयोगः।

कोऽपि जनः **स्पेक्टेकल्धारी, योगी च** इत्येतन्मम स्वप्नेऽप्यनूह्यम्। स्पेक्टेकल्धारी **योगाभ्यासनिरतः** स्यात्। स **योगी** इति तु सर्वथाऽप्यश्रद्धेयं वचः। तत्रापि **पातञ्जलयोगपरम्परां पालयन् योगी** इति यत् ; तत् सर्वथा गप्पम्। पातञ्जले हि योगसूत्रे ''प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् (३.२५) इत्युक्तम्।

अत्रेत्थं प्रतिभाति मे। पतञ्जलिरिति शब्दस्याहोस्वित् पातञ्जलमिति शब्दस्य किमपि कापीरैट् नास्ति। यः कोऽपि 'पतञ्जलियोगकेन्द्रम्' इति वा 'पातञ्जलमूलसिद्धान्तयोग' इति वा 'पतञ्जलिमार्गयोग' इति वा 'पातञ्जलपरिशुद्धयोग'इति वा ;स्वस्य मनसे यथा रोचेत, तथा ''पातञ्जलयोगशालां'' स्थापयितुं शक्नोति। पतञ्जलिस्तं जनं विरुध्य अधिकरणे(कोर्ट्) न करोत्यभियोगम्। भारतीयस्य संविधानस्यानुसारेण स्वमनसा कल्पितं दैहिकव्यायामादिकं ''पातञ्जलयोगम्'' अभिधातुं सर्वेषामस्ति स्वातन्त्र्यम्। एतासु योगशालासु यद् बोध्यते तस्यानुष्ठानेन किमपि प्रयोजनं न भवतीति न। एवं तु बाढं प्रतिपित्से-**वास्तविकः पातञ्जलो योगो नास्ति भूतले।** पातञ्जलयोगसूत्राणां मुद्रणप्रकाशने,''अन्यैः कृता इङ्ग्लीषनुवादा वास्तविकं योगानुभवं विनैव रचिताः, मया तु रचित इङ्गलीषनुवादो योगानुभवजैर्विचारैर्युक्त''इति सगर्वा घोषणा-इत्येतदादिकं तु वर्ततेऽनुवर्तते च।